॥ श्रीः ॥

# ॥ मुग्धाञ्जलिः ॥

तञ्जापुरान्तर्गतश्रीमत्पञ्चनदसंस्कृतमहाकलाशाला-

प्रधानमीमांसकेन

## श्रीशैलताताचार्यशिरोमणिना

विरचितः ।

# MUGDHANJALI.

a short poem

by

**D. T. TATACHARYA SIROMANI**

*Senior Professor of Mimamsa*

SANSKRIT COLLEGE, TIRUVADI

*Tanjore, Madras, India.*

Printed by R. Gururajachariar

"Sri Gopala Vilasa Press"

*KUMBAKONAM*

1925. Price 4 annas.

# Some opinions about the Author.

**Late R. RAJARAJAVARMA,** Professor of Sanskrit, and Dravidian languages, Trivandrum :—

D. T. Tatachariyar of Tanjore paid me a few visits and read to me some of his poetical productions. The young pandit has written many a lyric poem and also a few panegyrics of certain Rajas and Chiefs. He writes chaste, elegant and idiomatic sanskrit. Both in diction and conception of ideas he is far above the level of a modern versifier. He has very favourably impressed me as a budding poet of extraordinary abilities and I hope his precocious genious will receive due appreciation in the hands of Rajas and Maharajas.

Trivandrum }
5—2—1913. }

**M R.Ry. S. Kuppuswami Sastriar Avl.** M. A., F. M. U., *Professor of Sanskrit and Comparative Philology, Presidency College. and Curator*, Government Oriental Manuscripts Library, MADRAS :—

......He is a remarkably intelligent Pandit of exceptionally high attainments in Sanskrit. He has acquired

a specialistic proficiency, up to the highest standard, in Nyaya and Mimamsa and he possesses a sound knowledge of Sahitya, Alankara and Vyakarana. His oral exposition in Sanskrit and in Tamil has been found to be strikingly lucid, impressive and attractive and his Sanskrit composition in prose and verse is very good and always exhibits such characteristically good features as would never fail to command the apprecia-tion and esteem of all discerning critics....... I have no hesitation in saying that of all the Siromanis that have been turned out till now by the Madras University, since the first Oriental Titles Examination held in April 1915, Mr. D. Tirumalaitatachari is, in my opinion, the best and the ablest man, in respect of Pandit erudi-ion and depth and likewise on the side of the modern methods of scientific study and criticism.

---

M. R.Ry S. VEDANTA AIYANGAR avl. M.A., L.T., *Principal Board Sanskrit College*, Tiruvadi, *Tanjore* :-

......Considering his high specialistic proficiency in Nyaya, Mimamsa, and Vedanta with a good insight in the other Sastras and Belles Lettres, his powers of Sanskrit elocution and his critical acumen, I am glad, I should consider that he is one of the rarest and best productions which this institution should always be proud of.

---



॥ श्रीः ॥

# ॥ मुग्धाञ्जलिः ॥



अङ्ग त्वमञ्जननयन क्व नु गूढमास्से
सर्वज्ञ हा स्थितिमिमां मम किं न वेत्सि ।
त्वामन्तरेण शरणं भुवि कः किलास्ते
युक्तं न दुर्विषहतापमुपेक्षितुं माम् ॥ १ ॥

किं कारणं सरसिजाक्ष हतं मनो मे
सन्तप्यते सततमेव न शान्तिमेति ।
सद्यो गृहाण कृतमञ्जलिमार्तबन्धो
यन्मन्यसे त्वमुचितं मयि तत् कुरु द्राक् ॥ २ ॥

सन्त्यज्य सङ्गमखिलं सुखमेति धन्यः
नातीव खेदमुपयाति हि पामरोऽपि
मध्ये स्थितस्य तु सितासितबुद्धिभाजो
दौस्स्थ्यं यदेतदतिवाग्विभवं महेश ॥ ३ ॥

लोकस्य किं भवितुमर्हति दोष एष
किं वा ममैव शिशुकस्य मितम्पचस्य ।
ज्वालाप्रवालजटिलोदितहव्यवाह-
दन्दह्यमानमिव यज्जगदद्य भाति ॥ ४ ॥

आपातरम्यविषयक्षुभितात्मनोऽस्य
भ्रष्टस्य धार्मिकपथादपुनर्निवृत्ति ।
लोकस्य मात्स्यनयसम्भृतसङ्कटस्य
श्रीश्रीपते वद भविष्यति कीदृशोऽन्तः ॥ ५ ॥

अत्यन्तमेव निजधर्मरतिर्विलीना
जातो महांस्तु कलहः परधर्मसङ्गात् ॥
पश्यामि शान्तिमपि नाहमहो भवित्रीं ।
लीला कथं नु भवतोऽपि हरे दुरन्ता ॥ ६ ॥

त्वं चेत् करोषि मृगराजकुलावतंसं
हा सारमेयपदसेवनलभ्यवृत्तिम् ।
नैवास्ति कश्चिदनुयोक्तुमधीश्वर त्वां
शक्तिन्तु सोढुमुपकल्पय मानभङ्गम् ॥ ७ ॥

दुष्पूरकुक्षिनिहते न सुखं कुटुंबे
दौर्जन्यदग्धहृदये न च शर्म लोके ।
देवोऽपि दृष्टिपथमेति न दैत्यमाथी
हा हन्त हन्त भुवनेऽहमनाश्रयोऽस्मि ॥ ८ ॥

पाण्डित्यमस्ति न च मे परवञ्चनेषु
यस्मात् सदामुदितधूर्तसभोचितः स्याम् ।
हा वञ्चितोऽस्मि कतिधा शकटोपजीवैः
ग्रामीणशाकफलविक्रयिणीजनैश्च ॥ ९ ॥

पापिष्ठ मानस मदीय किमित्यकाण्डे
लोकान् प्रवृत्तमसि निन्दितुमस्तशङ्कम् ।
त्वं चेत् सदा भवसि धर्मपथैकतानं
लोकेन किन्नु तव यादृशतादृशेन ॥ १० ॥

सौजन्यसम्पदभिलाषवशेन यत्नं
कुर्वाण एव सहसा प्रतिपक्षरुद्धः ।
क्रुष्टो हठेन कलहाय बतास्मि देव
काले कलौ सुगुणशिक्षणमप्यशक्यम् ॥ ११ ॥

जाड्येन वा जलजलोचन मोहतो वा
लोकस्य सम्प्रतितनं प्रसमीक्ष्य दौस्थ्यम् ।
तिर्यक्त्वमेव मम भाति वरं नरत्वात्
खेदं किमेति महिषः कलिसम्भ्रमेण ॥ १२ ॥

वंशाभिमानमतिवृत्तसमागमेन
धर्माभिसन्धिमुदरार्थपरानुवृत्त्या ।
वैदुष्यदृप्तिमपि विस्मरणेन काले
धातर्विनाशयसि केन धृतिर्ममास्तु ॥ १३ ॥

चेतोऽथवाऽलमधुना परिदेवितैस्ते
स्वस्थं भवत् भज मुकुन्दपदारविन्दम् ।
ख्यातं प्रभोर्द्रुपदजागजपुङ्गवादि-
संरक्षणं भवसि किन्न्विह वादमात्रम् ॥ १४ ॥

धातर्मुकुन्दपदपङ्कजभक्तिहीनं
लोके नरन्तु सृजतः किमभीप्सितं ते ।
यद्वा वनेषु कुसुमानि मनोहराणि ।
कुर्वन् प्रयोजनविचारपराङ्मुखस्त्वम् ॥ १५ ॥

शास्त्राणि युद्धखलतां गमितानि लोके
नैवास्ति योगसरणिर्न तपो न मन्त्रः ।
केनाधुना कमललोचन वीतमोहो
दिव्यं त्वदीयपदपङ्कजमाश्रयेयम् ॥ १६ ॥

त्रैविद्यवृद्धपरिवर्धितशान्तिमन्ति
किं सन्ति पावनतमानि तपोवनानि ।
यान्यञ्जसाऽहमुपगम्य निरस्य ताप-
मव्याजधर्मकथया मुदितो भवेयम् ॥ १७ ॥

भक्तिर्न मेऽस्ति भवतश्चरणारविन्दे
शक्तिः पुनः परिमिता हृदयं न वश्यम् ।
लोकस्थितिस्तु भयदाऽद्य विचिन्त्यमाना
का मे गतिः कथय कञ्जविलोचन त्वम् ॥ १८ ॥

हा ब्रूत मे किमु जगन्ति निरीश्वराणि
शास्त्राणि किन्नु निखिलानि निरर्थकानि ।
पापैकसक्तमनसोऽपि सुदुःखितस्य
नोचेत् कथं स रुदितं न करोति कर्णे ॥ १९ ॥

स्वामिन् क्षमस्व यदहं परिमूढचेता
दुर्वाचमाशु वदितुं त्वयि च प्रवृत्तः ।
दावाग्निलीढमृगपोतदशं मनो मे
वक्तव्यमन्यदपि वा न विवेक्तुमीष्टे ॥ २० ॥

त्वां गूढसंस्थमपि हि त्वदनुग्रहेण
पश्यामि नाथ परितोऽपि पदेपदेऽहम् ।
मोहानुबन्धविभवेन परन्तु नाथ
त्वामञ्जसाऽनुभवितुं न ममास्ति शक्तिः ॥ २१ ॥

शक्नोमि योद्धुमितरैः सह नाहमीश
शान्तं जनाः परिभवन्ति दयाद्विष्टाः ।
गन्तुं पुरेव विपिनान्यपि नो विविक्ता-
न्यस्यां स्थितौ त्वमपि मुञ्चसि हा हतोऽस्मि ॥ २२ ॥

किं चित्त रोदिषि चिरेण कियच्चिरं मे
हिंसां करिष्यसि किमिच्छसि तद्वद त्वम् ।
किं वा धनायसि किमिच्छसि पण्डितत्वं
किं वा जिघांससि परं किमु मुक्तिवाञ्छा ॥ २३ ॥

उरुदय हतमेतन्मानसं मामकीनं
क्षुधितशिशुसदृक्षं क्वापि न प्रीतिमेति ।
गतिरिह परमार्त्या मुञ्चतस्त्वं न चेत् स्याः
कलिधरणिधरेभ्यो नाथ कस्ते विशेषः ॥ २४ ॥

न निर्दोषं शास्त्रं गणयति निजोत्कर्षतृषितः
स्वधर्मान् धिक्कृत्य स्पृहयति परेभ्यो भुवि जनः ।
यथेच्छं कुर्वाणः परहृदयतापं न मनुते
कथं साधुः कश्चिज्जगति सुखितो नाथ भविता ॥२५॥

हन्त स्वान्त कृतं तव प्ररुदितैः सर्वं सहस्व स्वयं
यद्यद् भावि परन्तु धन्य भगवत्पादारविन्दं भज ।
स त्वां नूनमनुग्रहोन्मुखतया दुःखाकरोति प्रभु-
र्वर्षिष्यन्नरविन्दबन्धुरधिकं तापं विधत्ते यतः ॥ २६ ॥

धर्मः प्राणः प्रजानां निगमनिगदितो हा कलिस्तं जहार
प्रेतास्तस्माद्वयं स्मस्तत इह बहवो गृध्रगोमायुवंश्याः ।
अस्मानास्कन्द्य खादन्त्यहमहमिकया कोनु तेषां निषेद्धा
नश्यामो नाथ यामो निरयमयि हरे स्वस्ति तावत्तवास्तु २७

॥ इति मुग्धाञ्जलिः ॥